यस्य पापं कृतं कर्म्म कुशलेन प्रधीय्यते * ।
प्रभासयति लोकं स इवाभ्रान्मुक्तचन्द्रमाः ॥ ७ ॥
अन्धभूतो ह्ययं लोकः तनुकोऽत्र विपश्यति ।
स्वर्गाय गच्छति ह्यल्पः जालमुक्तशकुन्तवत् ॥ ८ ॥
यान्त्यादित्यपथे हंसाः † ऋद्ध्याकाशे च यन्ति हि ।
धीरा लोकाच्च नीयन्ते जित्वा मारं ससैनिकम् ॥ ९ ॥
एकं धर्म्ममतीतस्य जन्तोश्चानृतवादिनः ।
वितीर्णपरलोकस्य अकार्य्यं नास्ति दुष्कृतम् ॥ १० ॥
न देवलोकं कृपणा व्रजन्ति शंसन्ति दानं न तथा च बालाः ।
धीरश्च दानं ह्यनुमोदमानः भवेत् स तेनैव सुखी परत्र ॥ ११ ॥
पृथिव्या ऐकराज्याच्च स्वर्गस्य गमनाच्च वा ।
सर्व्वलोकाधिपत्याच्च स्रोतःप्राप्तिफलं ‡ वरम् ॥ १२ ॥

---

## बुद्धवर्गः चतुर्द्दशः ।

जितञ्च यस्य ह्यवजीयते न न याति लोके जितमस्य कश्चित् ।
अनन्तदृष्टिञ्च तथैव बुद्धं केनापदं नेष्यथ तं पदेन ॥ १ ॥
यस्य जालिनी § विषात्मिका तृष्णा नास्ति कुहचिन्नेतुम् ।
तं बुद्धमनन्तगोचर-मपदं केन पदेन नेष्यथ ॥ २ ॥
ये ध्यानप्रसिता धीरा नैष्कर्म्योपशमे रताः ।
स्पृहयन्त्यपि देवास्तत्सम्बुद्धस्मृतिमत्पदम् ॥ ३ ॥
कृच्छ्रो मानुष्यलाभस्तु कृच्छ्रञ्च मर्त्यजीवितम् ।
बुद्धानां कृच्छ्र उत्पादः कृच्छ्रा सद्धर्म्मसंश्रुतिः ॥ ४ ॥
सर्व्वपापस्याकरणं कुशलस्योपसम्पदा ।
स्वचित्तपरिदापनं बुद्धानामिति शासनम् ॥ ५ ॥
क्षान्तिस्तपः परं तितिक्षा च परमं निर्व्वाणं वदन्ति बुद्धाः ।
भवति प्रव्रजितः परोपघाती न श्रमणः परं च विहेठयन् ॥ ६ ॥
भक्ते मात्राज्ञता शौच्यमुपवादोपघाततः ¶ ।

---

* प्रधीय्यते = आव्रियत इत्यर्थः ।
† हंसाः = योगिनः ।
‡ स्रोतआपत्तिमार्गप्राप्तस्य सप्तजन्माभ्यन्तरे निर्व्वाणः ।
§ जालिनी = बन्धनकारिणी । ¶ उपवादः = निन्दा ।

संवरः प्रातिमोक्ष्ये * च प्रान्ते च शयनासनौ।
अधिचित्ते तथाऽऽयोगः † एतद्धि बुद्धशासनम्॥ ७॥
न कार्षापणवर्षेण तृप्तिः कामेषु विद्यते।
दुःखाल्पस्वादकाः कामा इति विज्ञाय पण्डितः॥ ८॥
अपि दिव्येषु कामेषु रतिं स नाधिगच्छति।
तृष्णाक्षयरतः सम्यक्सम्बुद्धश्रावको भवेत्॥ ९॥
बहूनि शरणं यान्ति पर्व्वतांश्च वनानि च।
आरामवृक्षचैत्यानि मनुष्या भयतर्ज्जिताः॥ १०॥
नैतद्धि शरणं क्षेमं नैतत् शरणमुत्तमम्।
नैतत् शरणमागम्य सर्व्वदुःखात् प्रमुच्यते॥ ११॥
यश्च बुद्धञ्च धर्म्मञ्च सङ्घञ्च शरणं गतः।
चत्वारि चार्य्यसत्यानि ‡ सम्यग्ज्ञानेन पश्यति॥ १२॥
दुःखं दुःखसमुत्पादं दुःखस्य चातिक्रमम्।
आर्य्यमष्टाङ्गिकं मार्गं दुःखोपशमगामिनम्॥ १३॥
एतद्धि शरणं क्षेममेतत् शरणमुत्तमम्।
एतत् शरणमागम्य सर्व्वदुःखात् प्रमुच्यते॥ १४॥
दुर्लभः पुरुषश्रेष्ठः न स सर्व्वत्र जायते।
यत्र स जायते धीरः तत् कुलं सुखमेधते॥ १५॥
बुद्धानां सुख उत्पादः सुखा सद्धर्म्मदेशना।
सुखा सङ्घस्य सामग्री समग्राणां § तपः सुखम्॥ १६॥
पूजयतश्च पूजार्हान् बुद्धान् वा श्रावकान् यदि।
प्रपञ्चसमतिक्रान्तान् तीर्णशोकपरिद्रवान्॥ १७॥
पूजयतश्च तादृशान् निर्वृतानकुतोभयान्।
शक्यं पुण्यं न संख्यातुं मनुजस्यापि केनचित्॥ १८॥

---

* प्रातिमोक्ष्ये = पञ्चशीलेषु। संवरः = निष्ठा।

† अधिचित्ते = समाधौ। आयोगः = अवस्थितिः।

‡ चत्वारि आर्य्यसत्यानि = दुःखं, दुःखसमुत्पादः, दुःखातिक्रमः, दुःखोपशमगामी मार्गः। स च मार्गं अष्टाङ्गिकः, तद्यथा—सम्यग्दृष्टिः, सम्यक्संकल्पः, सम्यग्वाक्, सम्यक्कर्म्मान्तः (साधुव्यवसायः), सम्यगाजीवः, सम्यग्व्यायामः (साधुचेष्टा), सम्यक्स्मृतिः, सम्यक्समाधिश्चेति।

§ सामग्री = शान्तिः। समग्राणां = शान्तानाम्।

# सुखवर्गः पञ्चदशः ।

सुसुखं बत जीवामो वैरिषु ह्यवैरिणः ।
वैरिषु च मनुष्येषु विहरामो ह्यवैरिणः ॥ १ ॥
सुसुखं बत जीवाम आतुरेषु ह्यनातुराः ।
आतुरेषु मनुष्येषु विहरामो ह्यनातुराः ॥ २ ॥
सुसुखं बत जीवाम उत्सुकेषु ह्यनुत्सुकाः ।
उत्सुकेषु मनुष्येषु विहरामो ह्यनुत्सुकाः ॥ ३ ॥
सुसुखं बत जीवामो येषां नो नास्ति किञ्चन ।
प्रीतिभक्ष्या * भविष्यामो देवा आभास्वरा † यथा ॥ ४ ॥
जयो वैरं प्रसूते हि दुःखं शेते पराजितः ।
उपशान्तः सुखं शेते हित्वा जयपराजयौ ॥ ५ ॥
नास्ति रागसमश्चाग्निर्नास्ति द्वेषसमः कलिः ।
न स्कन्धसदृशं ‡ दुःखं नास्ति शान्तेः परं सुखम् ॥ ६ ॥
जिघत्सा § परमो रोगः संस्कारा अतिदुःखदाः ।
एतत् ज्ञात्वा यथाभूतं निर्व्वाणं परमं सुखम् ¶ ॥ ७ ॥
आरोग्यं परमो लाभः सन्तुष्टिः परमं धनम् ।
विश्वासः परमा ज्ञातिः निर्व्वाणं परमं सुखम् ॥ ८ ॥
प्रविवेकरसं पीत्वा रसमुपशमस्य च ।
निर्द्दरः ‖ स्याच्च निष्पापो धर्म्मप्रीतिरसं पिबन् ॥ ९ ॥
साधु दर्शनमार्य्याणां सन्निवासः सदा सुखः ।
अदर्शनेन बालानां नित्यमेव सुखी भवेत् ॥ १० ॥
बालसङ्गतचारी हि दीर्घाध्वानञ्च शोचति ।
दुःखो बालैर्हि संवासः अमित्रेणेव सर्व्वदा ।
धीरैश्च सुखसंवासः इव ज्ञातिसमागमः ॥ ११ ॥

---

* प्रीतिभक्ष्याः = प्रीतिभाजः ।

† आभास्वरा देवाः = तपोलोकस्थिता ध्यानाहारा देवाः ।

‡ स्कन्धाः = रूपवेदनासंज्ञासंस्कारविज्ञानानि ।

§ जिघत्सा = गृध्नुता ।

¶ अधिगच्छतीति शेषः ।

‖ निर्द्दरः = निर्भयः ।

प्राज्ञञ्च धीरञ्च बहुश्रुतञ्च तं धुर्य्यशीलं * व्रतवन्तमार्य्यम् ।
सुमेधसं सत्पुरुषं भजेत नक्षत्रमार्गं त्विव चन्द्रमा हि ॥ १२ ॥

---

## प्रियवर्गः षोड्शः ।

अयोगे युञ्जन्नात्मानं योगे चैव अयोजयन् ।
अर्थं हित्वा प्रियग्राही स्पृहेतात्मानुयोगिनम् † ॥ १ ॥
मा प्रियैर्हि समागच्छ अप्रियैर्हि कदाचन ।
अदर्शनं प्रियाणान्तु दुःखञ्चाप्रियदर्शनम् ॥ २ ॥
तस्मात् प्रियं न वै कुर्य्यात् प्रियाप्रियौ हि पापकौ ।
ग्रन्थास्तेषां न विद्यन्ते येषां न स्तः प्रियाप्रियौ ॥ ३ ॥
प्रियतो जायते शोकः प्रियतो जायते भयम् ।
प्रियतो विप्रमुक्तस्य नास्ति शोकः कुतो भयम् ॥ ४ ॥
प्रेमतो जायते शोकः प्रेमतो जायते भयम् ।
प्रेमतो विप्रमुक्तस्य नास्ति शोकः कुतो भयम् ॥ ५ ॥
रत्या वै जायते शोको रत्याश्च जायते भयम् ।
रत्यास्तु विप्रमुक्तस्य नास्ति शोकः कुतो भयम् ॥ ६ ॥
कामतो जायते शोकः कामतो जायते भयम् ।
कामतो विप्रमुक्तस्य नास्ति शोकः कुतो भयम् ॥ ७ ॥
तृष्णाया जायते शोकः तृष्णाया जायते भयम् ।
तृष्णाया विप्रमुक्तस्य नास्ति शोकः कुतो भयम् ॥ ८ ॥
शीलदर्शनसम्पन्नं धर्म्मिष्ठं सत्यवादिनम् ।
आत्मनः कर्म्म कुर्व्वाणं तं जनः कुरुते प्रियम् ॥ ९ ॥
जातच्छन्दो ह्यनाख्याते मनसा स्फुरितश्च ‡ यः ।
अकामावद्धचित्तश्च ऊर्द्धस्रोताः स उच्यते ॥ १० ॥
चिरप्रवासिपुरुषं दूरतः स्वस्ति चागतम् ।
सुहृदो ज्ञातिमित्राणि अभिनन्दन्ति चागतम् ॥ ११ ॥
कृतपुण्यं तथैवापि अस्मात् लोकात् परं गतम् ।
पुण्यानि प्रतिगृह्णन्ति प्रियं ज्ञातिमिवागतम् ॥ १२ ॥

---

* धुर्य्यशीलः = तितिक्षुः ।

† परमार्थं हित्वा प्रेयोरतजन आत्मयोगयुक्तस्य सौभाग्यं स्पृहेत ईर्ष्यतीत्यर्थः ।

‡ अनाख्याते = निर्व्वाणे । स्फुरितः = प्रफुल्लः ।

## क्रोधवर्गः सप्तदशः ।

क्रोधं जह्याच्च प्रजह्याद्धि मानं संयोजनं समतिक्रमेत् ।
तं नामरूपयोरसज्जमानं न त्वकिञ्चनमनुपतति दुःखम् ॥ १ ॥

यो वै क्रोधमुत्पतितं रथमिव भ्रान्तं धारयेत् ।
ब्रवीमि सारथिं तं हि रश्मिग्राहस्त्वितरः ॥ २ ॥

अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत् ।
कदर्य्यञ्चैव दानेन सत्येनालीकवादिनम् ॥ ३ ॥

सत्यं भणेन्न वै क्रुध्यात् दद्यादल्पेऽपि याचितः ।
एतैः स्थानैस्त्रिभिर्गच्छेत् दिवौकसामथान्तिके ॥ ४ ॥

मुनयोऽहिंसका ये च नित्यं कायेन संवृताः ।
यान्ति ते अच्युतं स्थानं गत्वा शोचन्ति यत्र न ॥ ५ ॥

अहोरात्रमनुशिक्षाशीलानां जाग्रतां सदा ।
निर्व्वाणमधिमुक्तानाम् * अस्तं गच्छन्ति चास्रवाः ॥ ६ ॥

एतत्तथातुल ! पौराणं नैतदद्यतनं खलु ।
तुष्णीं निन्दन्ति चासीनं निन्दन्ति बहुभाषिणम् ।
मितवाचोऽपि निन्दन्ति नास्ति लोके ह्यनिन्दितः ॥ ७ ॥

न भविष्यति नाभूच्च न तु चैतर्हि विद्यते ।
पुमान् निन्दित एकान्तम् एकान्तं वा प्रशंसितः ॥ ८ ॥

यच्चेत् विज्ञाः प्रशंसन्ति श्वः श्व एवानुविच्य हि ।
अच्छिद्रवृत्तिं मेधिरं प्रज्ञाशीलसमाहितम् ॥ ९ ॥

निष्कं जाम्बूनदस्येव कस्तं निन्दितुमर्हति ।
देवा अपि प्रशंसन्ति ब्रह्मणापि प्रशंसितः ॥ १० ॥

रक्षेत् प्रकोपं कायस्य कायेन संवृतो भवेत् ।
कायदुश्चरितं हित्वा तेन सुचरितं चरेत् ॥ ११ ॥

रक्षेत् प्रकोपं वाचश्च वाचा तु संवृतो भवेत् ।
वाचोदुश्चरितं हित्वा वाचा सुचरितं चरेत् ॥ १२ ॥

प्रकोपं मनसो रक्षेत् मनसा संवृतो भवेत् ।
मनोदुश्चरितं हित्वा तेन सुचरितं चरेत् ॥ १३ ॥

कायेन संवृता धीरा अथ वाचा च संवृताः ।
मनसा संवृता धीरास्ते वै सुपरिसंवृताः ॥ १४ ॥

---

* अधिमुक्तानाम्—प्रेप्सूनाम् ।

## मलवर्गः अष्टादशः ।

पाण्डुपलाश इव त्वमिदानीमसि च त्वां यमपुरुषा उपस्थिताः ।
उद्योगमुखे च त्वमधुना तिष्ठसि न ते पाथेयमपि विद्यते ॥ १ ॥
कुरु द्वी(दी)पमात्मानं चिप्रं व्यायच्छस्व पण्डितो भव ।
विधूतमलोऽनङ्गनः दिव्यं त्वमार्य्यभूमिमेष्यसि ॥ २ ॥
उपनीतवया असीदानीं सम्प्रयातोऽसि यमान्तिकम् ।
वासोऽपि ते नास्त्यन्तरा पाथेयमपि ते न विद्यते ॥ ३ ॥
कुरु द्वी(दी)पमात्मानं चिप्रं व्यायच्छस्व पण्डितो भव ।
विधूतमलोऽनङ्गनः न पुनर्जातिजरामुपेष्यसि ॥ ४ ॥
आनुपूर्व्येण मेधावी स्तोकं स्तोकं क्षणे क्षणे ।
कर्म्मारो रजतस्येव निर्धमेत् मलमात्मनः ॥ ५ ॥
यथायसः समुत्थाय मलं तदेव खादति ।
दुर्गतिं स्वं नयेत् कर्म्म तथातिधनचारिणम् * ॥ ६ ॥
अस्वाध्यायमला मन्त्रा अनुत्थानमला गृहाः ।
मलं वर्णस्य † कौसीद्यं प्रमादो रक्षतो मलम् ॥ ७ ॥
मलं स्त्रियाश्च दुश्चर्य्या मात्सर्य्यं ददतो मलम् ।
मलानि पापका धर्म्मा लोकेऽस्मिन् परत्र तथा ॥ ८ ॥
मलं मलतरं तस्मात् अविद्या परमं मलम् ।
प्रहाय मलमेतद्धि नैर्म्मल्यं यात भिक्षवः ॥ ९ ॥
सुजीवं काकशूरेण अह्रीकध्वंसिना तथा ।
प्रस्कन्दिना प्रगल्भेन संक्लिष्टेन ‡ च जीवितम् ॥ १० ॥
दुर्ज्जीवं ह्रीमता जीवं नित्यं शुचिगवेषिणा ।
अलीनेनाप्रगल्भेन शुद्धाजीवेन पश्यता § ॥ ११ ॥
योऽतिपातयति प्राणान् मृषावादञ्च भाषते ।
आददतीह चादत्तं परदारांश्च गच्छति ॥ १२ ॥
सुरामैरेयपानञ्च यो नरोऽनुयुनक्ति हि ।
इहैवासौ लोके तु मूलं खनति चात्मनः ॥ १३ ॥

---

* अतिधनचारिणः = चीवरं पिण्डपातं शयनासने भैषज्यञ्चातिक्रम्य जीवति यस्तम्, सर्व्वदूषमित्यर्थः । † वर्णस्य = शरीरस्य ।
‡ प्रस्कन्दिना = दुर्व्वृत्तेन । ध्वंसी = क्षतिकारकः । संक्लिष्टः = पापी ।
§ अलीनेन = आसक्तिरहितेन । शुद्धाजीवेन = शुद्धवृत्तिकेन । पश्यता = प्रज्ञेन ।

एवं पुरुष जानीहि अयताः पापधर्म्मिणः।
मा त्वां लोभस्तथाऽधर्म्मो रुन्ध्याद्दुःखाय वै चिरम् * ॥ १४ ॥
ददति वै यथाश्रद्धं यथाप्रसादनं जनाः।
मङ्कुः † भवति यस्तत्र परभोजनपानयोः।
दिवा वा न स रात्रौ वा समाधिमधिगच्छति ॥ १५ ॥
यस्य चैतत् समुच्छिन्नं मूलघातं समुद्धतम्।
दिवा वा स च रात्रौ वा समाधिमधिगच्छति ॥ १६ ॥
नास्ति रागसमस्त्वग्निर्ग्राहो द्वेषसमोऽस्ति न।
नास्ति मोहसमं जालं नास्ति तृष्णासमा नदी ॥ १७ ॥
सुदर्शं वर्ज्यमन्येषां दुर्दर्शं पुनरात्मनः।
परेषां हि स वर्ज्यानि पूणयति यथाबुषम्।
छादयत्यात्मनः पुनः शठवत् कितवात् कलिम् ‡ ॥ १८ ॥
परवर्ज्यानुदर्शिनो नित्यम् उद्ध्यानसञ्ज्ञिनः §।
आस्रवास्तस्य वर्द्धन्ते आरात् स आस्रवक्षयात् ॥ १९ ॥
आकाशे च पदं नास्ति श्रमणो बहिरस्ति न।
प्रपञ्चाभिरता ¶ प्रजाः निष्प्रपञ्चास्तथागताः ॥ २० ॥
आकाशे च पदं नास्ति श्रमणो बहिरस्ति न।
संस्काराः शाश्वता न स्युः बुद्धानां नास्ति चेञ्जनम् ॥ २१ ॥

---

## धर्म्मस्थवर्गः एकोनविंशः।

न भवेत्तेन धर्म्मस्थो येनार्थं सहसा ‖ नयेत्।
अर्थानर्थावुभौ यश्च निश्चिनुयाद्धि पण्डितः ॥ १ ॥
असाहसेन धर्म्मेण समेन नयते परान्।
गोप्ता धर्म्मस्य मेधावी धर्म्मस्थ इति चोच्यते ॥ २ ॥
भवति पण्डितस्तेन न यावत् बहु भाषते।
अभयः क्षेमी चावैरी पण्डित इति चोच्यते ॥ ३ ॥
तावत् स धर्म्मधारी न यावत् स बहु भाषते।

---

* लोभाधर्म्मौ दुःखप्रदानाय मा त्वां रुन्ध्याताम्।
† मङ्कुः = क्रुद्धः।
‡ कितवात् = द्यूतकरात्। कलिं = कपटपाशकम्।
§ उद्ध्यानसञ्ज्ञिनः = क्रोधरता इत्यर्थः।
¶ तृष्णाद्दृष्टिमाना इति बुद्धघोषः। ‖ सहसा = बलात्कारेण।

अल्पमपि च यः श्रुत्वा धर्म्मं कायेन पश्यति * ।
धर्म्मधारी भवति स यो धर्म्मान्न प्रमाद्यति ॥ ४ ॥
न भवेत् स्थविरस्तेन येनास्य पलितं शिरः ।
परिपक्कं वयस्तस्य मोघजीर्णः स उच्यते ॥ ५ ॥
यस्मिन् सत्यञ्च धर्म्मश्च अहिंसा संयमो दमः ।
स वै वान्तमलो धीरः स्थविर इति प्रोच्यते ॥ ६ ॥
न वाक्करणमात्रेण न वर्णपौष्कलेन वा ।
नरस्तु साधुरूपः स्यात् ईर्षालुर्मत्सरी शठः ॥ ७ ॥
यस्य चैतत् समुच्छिन्नं मूलघातं समुद्धतम् ।
वान्तदोषश्च मेधावी साधुरूपः स उच्यते ॥ ८ ॥
श्रमणो मुण्डकत्वेन नालीकमव्रती भणन् ।
इच्छालोभसमापन्नः श्रमणः किं भविष्यति ॥ ९ ॥
यः शमयति पापानि अणुस्थूलानि सर्व्वशः ।
शमितत्वात् हि पापानां श्रमण इति प्रोच्यते ॥ १० ॥
भवेत्तेन स नो भिक्षुर्यावञ्च भिक्षते परान् ।
विश्वं धर्म्मं समादाय भिक्षुर्भवेन्न तावता ॥ ११ ॥
बाहयित्वेह पुण्यञ्च पापञ्च ब्रह्मचर्य्यवान् ।
चरति संख्यया † लोके भिक्षुरिति स उच्यते ॥ १२ ॥
अविद्वान् न च मौनेन मूढ़रूपो मुनिर्भवेत् ।
यस्तु तुलां प्रगृह्येव वरमादाय पण्डितः ॥ १३ ॥
परित्यजति पापानि स मुनिस्तेन वै मुनिः ।
यो मन्यते ‡ मुनिस्तेन लोकद्वये स उच्यते ॥ १४ ॥
न तेन स भवत्यार्य्यः येन प्राणान् हिनस्ति हि ।
अहिंसया च वै सर्व्वप्राणानामार्य्य उच्यते ॥ १५ ॥
न शीलव्रतमात्रेण बाहुश्रुत्येन § वा पुनः ।
न वा समाधिलाभेन विविक्तशयनेन वा ॥ १६ ॥
सुखं स्पृशामि नैष्कर्म्यम् अपृथग्जनसेवितम् ¶ ।
मा विश्वासं गमो भिक्षो अप्राप्य आस्रवक्षयम् ॥ १७ ॥

---

* धर्म्ममात्मनि भावयति इत्यर्थः ।
† बाहयित्वा = अतिक्रम्य । संख्यया = प्रज्ञया सह ।
‡ मन्यते = मननं करोति । § बहुशास्त्रज्ञतया ।
¶ पृथग्जनाः मूर्खजनास्तैरसेवितम् ।

# मार्गवर्गः विंशतितमः।

मार्गेष्वाष्टाङ्गिकः श्रेष्ठश्चतुष्पदानि सत्यानाम् * ।
विरागः श्रेष्ठो धर्म्माणां द्विपदानाञ्च चक्षुष्मान् ॥ १ ॥
मार्गो व एष नास्त्यन्यो दर्शनस्य विशुद्धये ।
यूयं तं प्रतिपद्यध्वं मारस्यैष प्रमोहनः ॥ २ ॥
अत्र यूयं प्रतिपन्ना दुःखस्यान्तं करिष्यथ ।
आख्यातः शल्यसंस्थानं ज्ञात्वा मार्गो मयैष हि ॥ ३ ॥
युष्माभिः कार्य्यमातप्यम् † आख्यातारस्तथागताः ।
प्रतिपन्नाः ‡ प्रमोच्यन्ति ध्यायिनो मारबन्धनात् ॥ ४ ॥
प्रज्ञया सर्व्वसंस्कारा अनित्या इति पश्यति ।
निर्व्विन्दत्यथ § दुःखानि एष मार्गो विशुद्धये ॥ ५ ॥
प्रज्ञया सर्व्वसंस्कारा दुःखा यदेति पश्यति ।
निर्व्विन्दत्यथ दुःखानि एष मार्गो विशुद्धये ॥ ६ ॥
सर्व्वे धर्म्मा अनात्मानः प्रज्ञया चेति पश्यति ।
निर्व्विन्दत्यथ दुःखानि एष मार्गो विशुद्धये ॥ ७ ॥

उत्थानकाले हि य उत्थितो न, युवा बली चालसताप्रयुक्तः ।
संसन्नसङ्कल्पमनाः ¶ कुसीदः प्रज्ञा-सुमार्गन्त्वलसो न विन्देत् ॥ ८ ॥
वाचानुरक्षी मनसा सुगुप्तः कायेन नो चाकुशलं हि कुर्य्यात् ।
विशोधयेत् कर्म्मपथानिमान् त्रीन् आराधयेन्मार्गमृषिप्रदिष्टम् ॥ ९ ॥

योगाद्वै जायते भूरि अयोगाद्भूरिसङ्क्षयः ।
एतं द्विधापथं ज्ञात्वा भवाय विभवाय ‖ च ।
तथात्मानं निवेशयेद्यथा ** भूरि प्रवर्द्धते ॥ १० ॥
वनं †† छिन्धि च मा वृक्षं वनतो जायते भयम् ।
वनञ्च वनकं छित्वा नैर्व्वन्यं यात भिक्षवः ॥ ११ ॥

---

* चत्वारि आर्य्यसत्यवाचकवाक्यानि (बुद्धवर्गे द्रष्टव्यम्)।

† आतप्यम् = उद्यमः ।

‡ प्रतिपन्नाः = मार्गं प्रतिपन्नाः ।

§ निर्व्विन्दति = दुःखेषु निर्व्विण्णो भवति । ¶ सङ्कल्पावसन्नचेताः ।

‖ भवः = लाभः । विभवः = अलाभः ।

** भूरि = प्रज्ञेत्यर्थः ।

†† वनम् = वासनामित्यर्थः । न च व्यक्तितः संस्कारान् छिन्धि अपि तु जातितः छिन्धि । सा हि प्रान्तभूमिः प्रज्ञा इत्युच्यते ।

यावद्धि न वननं * छिद्यतेऽणुमात्रमपि नरस्य नारिषु।
प्रतिबद्धमनास्तावत् स क्षीरपको वत्स इव मातरि॥ १२॥
उच्छिन्धि स्नेहमात्मनः कुमुदं शारदमिव पाणिना।
शान्ते मार्गे वृंहय निर्व्वाणं सुगतेन च देशितम्॥ १३॥
इह वर्षासु वत्स्यामि हेमन्तग्रीष्मयोरिह।
चिन्तयतीति वै बालः अन्तरायं † न बुध्यते॥ १४॥
तं पुत्रपशुसम्मत्तं व्यासक्तमनसं नरम्।
सुप्तं ग्रामं महौघवत् मृत्युरादाय गच्छति॥ १५॥
न पुत्राः सन्ति त्राणाय न पिता नापि बान्धवाः।
अन्तकेनाधिपन्नस्य नास्ति ज्ञातिषु त्राणता॥ १६॥
एतदर्थवशं ज्ञात्वा पण्डितः शीलसंवृतः।
निर्व्वाणगमनं मार्गं क्षिप्रमेव विशोधयेत्॥ १७॥

---

## प्रकीर्णकवर्गः एकविंशः।

मात्रासुखपरित्यागात् पश्येत् चेत् विपुलं सुखम्।
त्यजेन्मात्रासुखं धीरः सम्पश्यन् विपुलं सुखम्॥ १॥
परदुःखोपदानेनात्मनो यः सुखमिच्छति।
वैरसंसर्गसंसृष्टः वैरात्स न प्रमुच्यते॥ २॥
यत्कृत्यमपविद्धं ‡ तत्कुर्य्युः पुनरकृत्यकम्।
उन्नलानां प्रमत्तानां तेषां वर्द्धन्त आस्रवाः॥ ३॥
येषाञ्च सुसमारब्धा नित्यं कायगता स्मृतिः।
अकृत्यन्ते न सेवन्ते कृत्ये सातत्यकारिणाम्।
सतां हि सम्प्रजानानमस्तं गच्छन्ति चास्रवाः॥ ४॥
क्षत्रियौ द्वौ च राजानौ मातरं पितरं तथा।
राष्ट्रं सानुचरं § हत्वा ब्राह्मणो याति चानघः॥ ५॥
श्रोत्रियौ द्वौ च राजानौ मातरं पितरं तथा।
व्याघ्रञ्च पञ्चमं ¶ हत्वा ब्राह्मणो याति चानघः॥ ६॥

---

* वननं = रागः। † अन्तरायं = मृत्युम्, जीवनान्तरायमित्यर्थः।

‡ अपचरितमित्यर्थः।

§ माता = तृष्णा। पिता = अहङ्कारः। द्वौ क्षत्रियौ राजानौ = शाश्वतवादः उच्छेदवादश्च। सानुचरं राष्ट्रं = नन्दिरागसहितानि द्वादशायतनानि।

¶ पञ्चमं व्याघ्रं = पञ्च निवरणानि, निर्व्वाणप्रतिपन्थाः।

सुप्रबुद्धं प्रबुध्यन्ते गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च नित्यं बुद्धगता स्मृतिः ॥ ७ ॥
सुप्रबुद्धं प्रबुध्यन्ते गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च नित्यं धर्मगता स्मृतिः ॥ ८ ॥
सुप्रबुद्धं प्रबुध्यन्ते गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च नित्यं सङ्घगता स्मृतिः ॥ ९ ॥
सुप्रबुद्धं प्रबुध्यन्ते गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च नित्यं कायगता स्मृतिः ॥ १० ॥
सुप्रबुद्धं प्रबुध्यन्ते गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च अहिंसायां रतं मनः ॥ ११ ॥
सुप्रबुद्धं प्रबुध्यन्ते गौतमश्रावकाः सदा ।
येषां दिवा च रात्रौ च भावनायां रतं मनः ॥ १२ ॥
कष्टं दुःखं दुरावासं दुष्प्रव्रज्यं हि दुरमम् ।
दुःखोऽसमानसंवासः दुःखानुपतितोऽध्वगः ।
न तस्मादध्वगः स्यात् दुःखानुपतितस्तथा ॥ १३ ॥
श्राद्धः शीलेन सम्पन्नः यशोभोगसमर्पितः * ।
यद्देशं भजते यं यं तत्र तत्रैव पूजितः ॥ १४ ॥
दूरे सन्तः प्रकाशन्ते हिमवानिव पर्वतः ।
असन्तोऽत्र न दृश्यन्ते रात्रिक्षिप्ता यथा शराः ॥ १५ ॥
एकासनैकशय्यो यः एकचरस्त्वतन्द्रितः ।
दमयन्नेक आत्मानं वनान्ते † हर्षितो भवेत् ॥ १६ ॥

---

## निरयवर्गः द्वाविंशः ।

अभूतवादी निरयं ह्युपैति नाहं करोमीति च यो हि ज्ञात्वा ।
प्रेत्यसमौ तौ भवतस्तथोभौ निहीनकर्म्मौ मनुजौ परत्र ॥ १ ॥
ये बहुपापधर्माणः काषायधृगसंयताः ।
निरयमुपपद्यन्ते पापाश्च पापकर्म्मभिः ॥ २ ॥
श्रेयस्ययोगुडोभुक्ता तप्ता चाग्निशिखोपमा ।
यचेत् भुञ्जीत दुःशीलो राष्ट्रपिण्डमसंयताः ॥ ३ ॥

---

* यशोभोगसमर्पितः—यशउपार्ज्जनशीलः ।
† वनान्ते—ह्रदान्ते ।

स्थानानि चत्वारि नर: प्रमत्त आपद्यते वै परदारसेवी।
अपुण्यलाभम् अनिकामशय्यं* निन्दां तृतीयां निरयं चतुर्थम्॥ ४॥
अपुण्यलाभो गतिश्च पापिका भीतस्य भीतायाः रतिः स्तोकिका।
राजा च दण्डं गुरुकं प्रणयति तस्मान्नरः परदारान् न सेवेत॥ ५॥
कुशो यथा दुर्गृहीतः हस्तमेवानुकृन्तति।
दुष्परामृष्टं श्रामण्यं निरयायोपपद्यते॥ ६॥
यत्किञ्चित् शिथिलं कर्म यत् संक्लिष्टञ्च तत् तथा।
सङ्कस्सरं ब्रह्मचर्य्यञ्च नैतत् महाफलं भवेत्॥ ७॥
कुर्य्याच्चेदथ कुर्व्वीत एतद्दृढपराक्रमैः।
शिथिलो हि परिव्राजः भूय आकिरते रजः॥ ८॥
अकृतं दुष्कृतं श्रेयः पश्चात्तपति दुष्कृतात्।
कृतञ्च सुकृतं श्रेयः यत् कृत्वा नानुतप्यते॥ ९॥
नगरं यथा प्रत्यन्तं गुप्तमन्तर्बहिस्तथा।
गोपायेदेवमात्मानं मा वै क्षणमुपत्यगाः †।
क्षणातीता हि शोचन्ति निरये तु समर्पिताः॥ १०॥
येऽलज्जिताः ‡ च लज्जन्ते ये न लज्जन्ते लज्जिताः।
मिथ्यादृष्टिं समादानाः सत्त्वा गच्छन्ति दुर्गतिम्॥ ११॥
अभये भयदर्शिनः भये चाभयदर्शिनः।
मिथ्यादृष्टिं समादानाः सत्त्वा गच्छन्ति दुर्गतिम्॥ १२॥
ये वर्ज्ज्यमतयोऽवर्ज्ये वर्ज्ये चावर्ज्जदर्शिनः।
मिथ्यादृष्टिं समादानाः सत्त्वा गच्छन्ति दुर्गतिम्॥ १३॥
वर्ज्यञ्च वर्ज्यतो ज्ञात्वा तथा वर्ज्यमवर्ज्यतः।
सत्त्वा गच्छन्ति सुगतिं सम्यग्दृष्टिं समादानाः॥ १४॥

---

## नागवर्गस्त्रयोविंशः।

नागोऽहमिव संग्रामे चापतः पतितं शरम्।
तितिक्षिष्याम्यतिवाक्यं दुःशीला बहवो जनाः॥ १॥
दान्तं नयन्ति समितिं दान्तं राजाभिरोहति।
दान्तः श्रेष्ठो मनुष्येषु योऽतिवाक्यं तितिक्षति॥ २॥

---

* अनिकामशय्यं—अतृप्तिजनकशयनम्। † क्षणा कालक्षेपं न कुर्य्यादित्यर्थः।
‡ अलज्जिताः—लज्जाकरविषये अलज्जिता इत्यर्थः।

वरमश्वतरा दान्ताः आजानेयाश्च सैन्धवाः ।
कुञ्जराश्च महानागाः आत्मा दान्तस्ततो वरम् ॥ ३ ॥
एतैर्न वै तथा यानैः गच्छेयुरगतं दिशम् ।
यथात्मना सुदान्तेन दान्तो दान्तेन गच्छति ॥ ४ ॥
धनपालको नाम कटुकप्रभेदनः कुञ्जरो वै दुर्निवारः ।
बद्धो नो कवलं भुंक्ते स कुञ्जरः स्मरति सदा नागवनस्य ॥ ५ ॥
यदा तु मिद्धी * च भवेन्महाघसः निद्रायिता सम्परिवर्त्तशायिकः ।
निवाप-सम्पुष्ट-महावराहवत् पुनर्गर्भमुपैति मन्दकः ॥ ६ ॥
इदं पुरे चित्तमचारि चारिकं † यथाभिलाषञ्च यतो यथासुखम् ।
तन्निग्रहीष्यामि तथाद्य योनिशः ‡ नागं प्रभिन्नन्त्विव चाङ्कुशग्रहः ॥ ७ ॥
अप्रमादरताश्च स्युः स्वचित्तमनुरक्षत ।
दुर्गादुद्धरतात्मानं पङ्के सक्तो यथा गजः ॥ ८ ॥
चेल्लभेत निपकं स सहायञ्च साधु-विहारि-धीरं समं चरन् ।
तेनाभिभूय वै सर्व्वान् परिश्रयान् चरेदात्तमना § हि स्मृतिमान् ॥९॥
नो लभेत निपकं सहचरं सहायं चेत्तु साधु-विहारि-धीरम् ।
राजेव प्रहाय विजितराष्ट्रं चरेदेको वने मातङ्ग इव ॥ १० ॥
एकस्य चरणं श्रेयः नास्ति बाले सहायता ।
विचरेदेव चैकाकी कुर्य्यात् पापानि नैव हि ।
अल्पोत्सुकश्च मातङ्गः अरण्यान्यां यथा करी ॥ ११ ॥
अर्थे च जाते तु सुखाः सहायाः तुष्टिः सुखा या त्वितरेतरेण ¶ ।
पुण्यं सुखं जीवितसंचये हि सर्व्वस्य दुःखस्य सुखं प्रहाणम् ॥ १२ ॥
सुखा मात्रीयता लोके अथ पित्रीयता सुखा ।
सुखा श्रामण्यता लोके अथ ब्रह्मण्यता सुखा ॥ १३ ॥
यावज्जरा सुखं शीलं सुखा श्रद्धा प्रतिष्ठिता ।
सुखः प्रज्ञाप्रतिलाभः पापस्याकरणं सुखम् ॥ १४ ॥

---

## तृष्णावर्गः चतुर्विंशः ।

मनुजस्य प्रमत्तचारिणः तृष्णा वर्द्धते मालुरिव ।
स प्लवते चाहरहः फलमिच्छुर्वने यथा वानरः ॥ १ ॥

---

* मिद्धी = अलसः । † चारिकं = चर्य्याम् । ‡ योनिशः = मूलभावनया ।
§ परिश्रयान् = श्वापदान् रागद्वेषभयानि वा । आत्तमनाः = तुष्टमनाः ।
¶ इतरेतरेण = अल्पेनाधिकेन वा द्रव्येण ।

यो वै विषात्मिका तृष्णा यं साहयति जल्पिनी * ।
शोकास्तस्य प्रवर्द्धन्ते प्रतन्वद्भिव वीरणम् ॥ २ ॥
तृष्णां दुरत्ययां लोके यः साहयति जल्पिनीम् ।
तस्मात् शोकाः प्रपतन्ति पद्मिन्द्वरिव पुष्करात् ॥ ३ ॥
तद्वो वदामि भद्रं वः यावन्तोऽत्र समागताः ।
मूलं खनथ तृष्णायाः उशीरार्थीव वीरणम् ।
स्रोत इव नलं मा वो मारोऽमांक्षीत् पुनः पुनः ॥ ४ ॥
वृक्षोऽपि मूले ह्यनुपद्रवे तु छिन्नो दृढ़ो रोहति चैव भूयः ।
एवञ्च तृष्णानुशयेऽप्रनष्टे निवर्त्तते (आवर्त्तते) दुःखमिदं पुनश्च ॥ ५ ॥
यस्य स्रोतांसि षट्त्रिंशत् † भूयासुखितमोदिनः ।
वाहा वहन्ति दुर्दृष्टिं संकल्पा रागनिःसृताः ॥ ६ ॥
सर्व्वदा स्रवति स्रोतः उद्भिन्नता ‡ च तिष्ठति ।
ताञ्च दृष्ट्वा लतां जातां मूलं प्रज्ञया छिन्दथ ॥ ७ ॥
सौमनस्यानि स्निग्धानि सृतानि § सन्ति देहिनः ।
स्रोतःसृताः सुखैषिणः जातिजरोपगा नराः ॥ ८ ॥
तृष्णया पुरस्कृताः प्रजाः परिसर्पन्ति शश इव बद्धः ।
संयोजनसङ्गसक्ता ¶ दुःखं गच्छन्ते चिराय ॥ ९ ॥
तृष्णया पुरस्कृताः प्रजाः परिसर्पन्ति शश इव बद्धः ।
ततस्तृष्णाविनोदाय ‖ भिक्षुराकाङ्क्षेद्विरागं स्वम ॥ १० ॥
यो निर्व्वनार्थो हि वनाधिमुक्तः वनमुक्तो धावति वै वनञ्च ।
तं पुद्गलं पश्यत चैव मुक्तः पुनश्च यो धावति बन्धमेव ॥ ११ ॥
न तद्दृढ़ं बन्धनमाह धीरः यदायसं दारुज-पर्व्वजं वा ।
सारेति बुद्ध्या मणिकुण्डलेषु पुत्रेषु दारेषु च या ह्यपेक्षा ॥ १२ ॥
दृढ़मेतद्बन्धनमाहुर्धीरा अपहारिणं श्लथिलं दुष्प्रमोचम् ।
एतदपि छित्वा च परिव्रजन्ति अनपेक्षिणः कामसुखं प्रहाय ॥ १३ ॥

---

* जल्पिनी — प्रवर्द्धमाना ।

† षट्त्रिंशत् स्रोतांसि — चक्षुःश्रोत्रनासाजिह्वाकाय-मनांसि तथा गन्धरसरूप-शब्दस्पर्श्धर्म्मधातवस्तथा च चक्षुरादिविज्ञानानीति वाह्याभ्यन्तरभेदात् षट्त्रिंशत् ।

‡ उद्भिन्नता — प्रवर्द्धमाना लता इत्यर्थः ।

§ स्निग्धानि — मनोरमाणि । सृतानि — सर्व्वविषयाणि ।

¶ संयोजनसङ्गसक्ताः — भवसङ्गलग्ना इत्यर्थः । ‖ निष्क्रमाये ।

ये रागरक्ता अनुपतन्ति स्रोतसि स्वयंकृते मर्कट इव जाले।
एतदपि छित्त्वा च व्रजन्ति धीरा अनपेक्षिणः सर्व्वदुःखं प्रहाय ॥ १४ ॥
मुञ्च पश्चात् पुरो मुञ्च मध्ये च भवपारगः।
सर्व्वथा मुक्तचेता नोपैषि जातिजरां पुनः ॥ १५ ॥
वितर्कप्रमथितस्य तीव्ररागस्य देहिनः।
शुभानुदर्शिनः तृष्णा भूय एव प्रवर्द्धते।
सुदृढं तथा वै एषः करोति खलु बन्धनम् ॥ १६ ॥
वितर्कोपशमे यो रतोऽशुभं भावयति सदाऽसक्तः।
एष खलु व्यतिक्रामयति एष छिनत्ति मारबन्धनम् ॥ १७ ॥
गतो निष्ठामसन्त्रासो वीततृष्णो ह्यनङ्गणः।
उत्सृज्य भवशल्यानि अन्तिमोऽयं समुच्छ्रयः * ॥ १८ ॥
वीततृष्णो ह्यनादानः † निरुक्तिपदकोविदः।
अक्षराणां सन्निपातं वेद पूर्व्वापराणि च।
स चान्तिमशरीरी वै महाप्रज्ञस्तथैव च।
महापुरुष इत्येव पण्डितैर्हि स उच्यते ॥ १९ ॥
सर्व्वाभिभूः सर्व्वविदस्मि चाहं सर्व्वेषु धर्म्मेषु न चोपलिप्तः।
तृष्णाक्षये सर्व्वजहो विमुक्तः स्वयं ह्यभिज्ञाय कमुद्दिशेयम् ॥ २० ॥
सर्व्वं दानं धर्म्मदानं जयेद्धि तृष्णाक्षिर्वै सर्व्वदुःखं जयेद्धि।
सर्व्वं रसं धर्म्मरसो जयेद्धि सर्व्वां रतिं धर्म्मरतिर्जयेद्धि ॥ २१ ॥
भोगा दुर्म्मेधसं घ्नन्ति नो चेत् पारगवेषिणम्।
घ्नन्ति चाज्ञ इवात्मानं दुर्म्मेधा भोगतृष्णया ॥ २२ ॥
क्षेत्राणि तृणदोषाणि रागदोषा इमाः प्रजाः।
तस्माद्धि वीतरागेषु दत्तं भवेन्महाफलम् ॥ २३ ॥
क्षेत्राणि तृणदोषाणि द्वेषदोषा इमाः प्रजाः।
तस्माद्धि वीतद्वेषेषु दत्तं भवेन्महाफलम् ॥ २४ ॥
क्षेत्राणि तृणदोषाणि मोहदोषा इमाः प्रजाः।
तस्माद्धि वीतमोहेषु दत्तं भवेन्महाफलम् ॥ २५ ॥
क्षेत्राणि तृणदोषाणि इच्छादोषा इमाः प्रजाः।
तस्माद्धि विगतेच्छेषु दत्तं भवेन्महाफलम् ॥ २६ ॥

---

* समुच्छ्रयः = शरीरबन्धनम्। † अनादानः = अविद्याहीनः।

## भिक्षुवर्गः पञ्चविंशः।

चक्षुषा संवरः साधुः साधुः श्रोत्रेण संवरः।
घ्राणेन संवरः साधुः जिह्वया साधुः संवरः॥ १॥
कायेन संवरः साधुः साधुर्वाचया संवरः।
मनसा संवरः साधुः साधुः सर्व्वत्र संवरः।
सर्व्वत्र संवृतो भिक्षुः सर्व्वदुःखात् प्रमुच्यते॥ २॥
हस्तसंयतश्च पादसंयतः वाक्येन संयतश्च संयतोत्तमः।
अध्यात्मरतः समाहितः एकः सन्तोषितश्च यस्तमाहुर्भिक्षुम्॥ ३॥
यो मुखसंयतो भिक्षुः मन्त्रभाषी ह्यनुद्धतः।
दीपयति धर्म्मञ्चार्थं मधुरं तस्य भाषितम्॥ ४॥
धर्म्मारामो धर्म्मरतः धर्म्ममनुविचिन्तयन्।
धर्म्ममनुस्मरन् भिक्षुः सद्धर्म्मान्न प्रहीयते॥ ५॥
स्वलाभं नातिमन्येत* नान्येषां स्पृहयं चरेत्।
अन्येषां स्पृहयन् भिक्षुः समाधिं नाधिगच्छति॥ ६॥
अल्पलाभोऽपि चेद्भिक्षुः स्वलाभं नातिमन्यते।
तं वै देवा प्रशंसन्ति शुद्धाजीवमतन्द्रितम्॥ ७॥
सर्वशो नामरूपयोर्यस्य नास्ति ममायितम्।
न चैवासति शोचति भिक्षुरिति स उच्यते॥ ८॥
यो मैत्रीविहारी भिक्षुः प्रसन्नो बुद्धशासने।
अधिगच्छेत् पदं शान्तं संस्कारोपशमं सुखम्॥ ९॥
सिञ्च भिक्षो इमां नावं सेचिता लघुतामियात्।
छित्त्वा द्वेषञ्च रागञ्च ततो निर्व्वाणमेष्यसि॥ १०॥
पञ्च† छिन्धि जहेत् पञ्च पञ्चोत्तरं च भावय।
पञ्चसङ्गातिगो भिक्षुः ओघतीर्णः स उच्यते॥ ११॥
ध्याय भिक्षो प्रमादी मा ते मा कामगुणे ते भ्रमतु मनः।
मा गिल प्रमत्तो लोहगुलिं मा क्रन्द दह्यमानो दुःखी॥ १२॥
नाप्रज्ञस्यास्ति वै ध्यानं प्रज्ञा चाऽध्यायतोऽस्ति न।
यस्मिन् ध्यानं तथा प्रज्ञा निर्व्वाणान्तिक एव सः॥ १३॥
शून्यागारं प्रविष्टस्य भिक्षोर्वै शान्तचेतसः।
भवेदमानुषी रतिः सम्यग्धर्म्मं विपश्यतः॥ १४॥

---

* नात्यर्थं स्पृहयेत्, न अवजानीयात् वा।　　† पञ्च = पञ्चेन्द्रियाणि।

यदा यदा तु स्कन्धानां संमृशत्युदयव्ययौ ।
लभते प्रीतिप्रामोद्यममृतं तद्विजानताम् ॥ १५ ॥
भवति चादिस्तत्रायं भिक्षोः प्राज्ञस्य चेह वै ।
इन्द्रियगुप्तिसन्तुष्टी प्रातिमोक्षे च संवरः * ।
मित्रं भजस्व कल्याणं शुद्धाजीवमतन्द्रितम् ॥ १६ ॥
प्रणीसन्धारवृत्तः † सन् आचारकुशलो भवेत् ।
प्रामोद्यबहुलस्ततः दुःखस्यान्तं करिष्यति ॥ १७ ॥
वर्षिका इव पुष्पाणि मर्द्दितानि‡ प्रमुञ्चति ।
एवं द्वेषञ्च रागञ्च विमुञ्चेयुश्च भिक्षवः ॥ १८ ॥
शान्तवाक् शान्तकायश्च शान्तमनाः समाहितः ।
शान्तलोकामिषो भिक्षुः उपशान्तः स उच्यते ॥ १९ ॥
संवसेदात्मनात्मानम् आत्मानं चोदयात्मना ।
धृतिमानात्मगुप्तः स सुखं भिक्षुश्चरिष्यति ॥ २० ॥
आत्मा हि चात्मनो नाथः आत्मा हि गतिरात्मनः ।
तस्मात् संयमयात्मानं भद्राश्वमिव वाणिजः ॥ २१ ॥
प्रामोद्यबहुलो भिक्षुः प्रसन्नो बुद्धशासने ।
अधिगच्छेत् पदं शान्तं संस्कारोपशमं सुखम् ॥ २२ ॥
स योऽपि दहरो§ भिक्षुः युज्यते बुद्धशासने ।
प्रभासयतीमं लोकं मुक्ताभ्र इव चन्द्रमाः ॥ २३ ॥

## ब्राह्मणवर्गः षड्विंशः ।

छिन्धि स्रोतः पराक्रम्य कामानपनुद ब्राह्मन् ।
संस्काराणां क्षयं ज्ञात्वा ब्राह्मण चाकृतज्ञोऽसि ॥ १ ॥
भवति धर्म्मयोर्द्वयोः¶ ब्राह्मणः पारगो यदा ।
अथास्य सर्व्वसंयोगाः अस्तं गच्छन्ति जानतः ॥ २ ॥
यस्य पारमपारं वा पारापारं न विद्यते ।
वीतदरं विसंयुक्तं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३ ॥

---

* प्रातिमोक्षे संवरः = मोक्षधर्म्माचरणमित्यर्थः ।

† प्रणीनां प्रज्ञानां सन्धारेण संस्कारेण वृत्तः वर्त्तमानः प्रज्ञासंस्कृत इत्यर्थः ।

‡ वर्षिकाः — पुष्पितवृक्षाः । मर्द्दितानि = परिम्लानानि ।

§ युवा ।   ¶ संयमभावनाधर्म्मयोः ।

ध्यायिविरजमासीनं * कृतकृत्यमनाश्रवम्।
उत्तमार्थमनुप्राप्तं ब्राह्मणं तं ब्रवीम्यहम्॥ ४॥
दिवा तपति चादित्यः रात्रावाभाति चन्द्रमाः।
सन्नद्धस्तपति क्षत्रः ध्यायी च ब्राह्मणस्तपेत्।
अथ सर्व्वमहोरात्रं बुद्धस्तपति तेजसा॥ ५॥
वाहितपापो ब्राह्मण इति संचर्य्यः श्रमणश्चोच्यते।
प्रव्राजयन्नात्मनो मलं ततः प्रव्रजित इत्युच्यते॥ ६॥
ब्राह्मणं प्रहरेद्धि न नास्मै च ब्राह्मणो मुञ्चेत् †।
धिग्ब्राह्मणस्य हन्तारं योऽस्मै मुञ्चति तस्माद्धिक्॥ ७॥
श्रेयो हि विप्रस्य न खल्वकिञ्चित् ‡ यदा निषेधो मनसः प्रियेभ्यः।
यतो यतो हिंस्रमनो निवृत्तं ततस्ततः शाम्यति दुःखमेव॥ ८॥
यस्य कायेन वाचा च मनसा नास्ति दुष्कृतम्।
त्रिभिश्च संवृतं स्थानैः ब्राह्मणं तं ब्रवीम्यहम्॥ ९॥
यस्माद्धर्म्मं विजानीयात् सम्यक्सम्बुद्धदेशितम्।
सत्कृत्यं तं नमस्येत ब्राह्मणश्चाग्निहोत्रवत्॥ १०॥
न जटाभिः न गोत्रेण न जात्या ब्राह्मणो भवेत्।
यस्मिन् सत्यं च धर्म्मश्च स ब्राह्मणः शुचिश्च सः॥ ११॥
किं ते जटाभिर्दुर्म्मेधः किं ते चाजिनवाससा।
परिमार्जयसि वहिः चान्तरं गहनं च ते॥ १२॥
पांशुकूलधरं जन्तुं धमनीसन्ततं कृशम्।
ध्यायन्तं वन एकाकं ब्राह्मणं तं ब्रवीम्यहम्॥ १३॥
ब्रवीमि ब्राह्मणं नाहं योनिजं मातृसम्भवम्।
भोवादी नाम भवति भवेत् चेत् स सकिञ्चनः।
अकिञ्चनमनादानं ब्राह्मणं तं ब्रवीम्यहम्॥ १४॥
सर्व्वसंयोजनं छित्वा परित्रस्यति वै न यः।
सङ्गातिगं विसंयुक्तं ब्राह्मणं तं ब्रवीम्यहम्॥ १५॥
छित्वा नन्दिं § वरत्राञ्च ¶ सन्दानं ‖ सहानुक्रमम्।
उत्क्षिप्तपरिघं ** बुद्धं ब्राह्मणं तं ब्रवीम्यहम्॥ १६॥

---

* आसीनम्=एकाकिनम्। † अस्मै=प्रहारकाय। मुञ्चेत्=क्रोधं कुर्य्यादित्यर्थः।
‡ न अकिञ्चित् श्रेयः—न अल्पं श्रेयः। § क्रोधम्।
¶ वरत्राम्—आवरणीं तृष्णाम्। ‖ सन्दानं—द्वाषष्टिसंख्यकं दृष्टिसन्तानम्।
** उत्क्षिप्तपरिघं—उन्मोचितकवाटकम्, अविद्यातीतमित्यर्थः।

अक्रोशन् वधबन्धौ च अदुष्टो अधितिक्षति।
क्षान्तिबलं बलानीकं * ब्राह्मणं तं ब्रवीम्यहम् ॥ १७ ॥
अक्रोधनं व्रतवन्तं शीलवन्तमनुश्रुतम्।
दान्तमन्तिमशारीरं ब्राह्मणं तं ब्रवीम्यहम् ॥ १८ ॥
वारीव पुष्करपत्रे आराग्र इव सर्षपः।
यो न लिम्पति कामेषु ब्राह्मणं तं ब्रवीम्यहम् ॥ १९ ॥
यो दुःखस्य प्रजानाति इहैव क्षयमात्मनः।
प्रास्तभारं † विसंयुक्तं ब्राह्मणं तं ब्रवीम्यहम् ॥ २० ॥
मेधाविनम्धीरप्रज्ञम् अमार्गमार्गकोविदम्।
उत्तमार्थमनुप्राप्तं ब्राह्मणं तं ब्रवीम्यहम् ॥ २१ ॥
असंसृष्टमनागारैः उभाभ्यां गृहिभिस्तथा।
अनोकःसार्यल्पेच्छुर्यः ब्राह्मणं तं ब्रवीम्यहम् ॥ २२ ॥
निधाय दण्डं भूतेषु त्रसेषु स्थावरेषु च।
घातयति न हन्ति यः ब्राह्मणं तं ब्रवीम्यहम् ॥ २३ ॥
अविरुद्धं विरुद्धेषु आत्तदण्डेषु ‡ निर्वृतम्।
सादानेषु अनादानं § ब्राह्मणं तं ब्रवीम्यहम् ॥ २४ ॥
यस्य द्वेषश्च रागश्च मानो म्रक्षश्च पातितः।
सर्षप इव आराग्रात् ब्राह्मणं तं ब्रवीम्यहम् ॥ २५ ॥
अकर्कशां विज्ञापनीं ¶ गिरं सत्यामुदीरयेत्।
यया नाभिषजेत् किञ्चित् ब्राह्मणं तं ब्रवीम्यहम् ॥ २६ ॥
यो दीर्घमिह वा ह्रस्वमणु स्थूलं शुभाशुभम्।
लोकेऽदत्तं न आदत्ते ब्राह्मणं तं ब्रवीम्यहम् ॥ २७ ॥
आशा यस्य न विद्यन्ते अस्मिन् लोके परत्र च।
निराश्रयं विसंयुक्तं ‖ ब्राह्मणं तं ब्रवीम्यहम् ॥ २८ ॥
यस्यालया न विद्यन्ते आज्ञाय अकथंकथी **।
अमृतावगाधं †† प्राप्तं ब्राह्मणं तं ब्रवीम्यहम् ॥ २९ ॥

---

* अक्रोशन् = अनिन्दन्। बलानीकं = दृढबलयुक्तम्।
† प्रास्तभारं = भारहीनम्। ‡ आत्तदण्डेषु = दण्डविधायकेषु।
§ अनादानं = अनासक्तम्। ¶ विज्ञापनीं = विज्ञानप्रसारिणीम्।
‖ विसंयुक्तं = बन्धनहीनम्। ** आलयाः = तृष्णाः, आज्ञाय = ज्ञात्वा, अकथंकथी = संशयच्छेदकारी भवति इत्यर्थः।
†† अमृतावगाधं = घनामृतम्, अर्हत्पदम् इत्यर्थः।

य: पुण्यमिह पापञ्च उभे सङ्गमुपात्यगात् ।
अशोकं विरजं शुद्धं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३० ॥
चन्द्रवत् विमलं शुद्धं विप्रसन्नमनाविलम् ।
नन्दिभवपरिक्षीणं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३१ ॥
इमं परिपथं दुर्गं संसारं मोहमत्यगात् ।
तीर्णो पारगतो ध्यायी अनेजो योऽकथंकथी ।
अनुपादाय निर्वृत: ब्राह्मणं तं ब्रवीम्यहम् ॥ ३२ ॥
इह प्रहाय य: कामान् अनागार: परिव्रजेत् ।
कामभवपरिक्षीणं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३३ ॥
तृष्णामिह प्रहाय य: अनागार: परिव्रजेत् ।
तृष्णाभवपरिक्षीणं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३४ ॥
हित्वा मानुषकं योगं दिव्यं * योगमुपात्यगात् ।
सर्वयोगविसंयुक्तं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३५ ॥
अरतिञ्च रतिं हित्वा शीतिभूतं † निरुपाधिम् ।
सर्वलोकाभिभू-वीरं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३६ ॥
च्युतिं यो वेद सत्त्वानामुपपत्तिं ‡ च सर्वश: ।
असक्तं सुगतं बुद्धं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३७ ॥
यस्य गतिं न जानन्ति देवा गन्धर्व्वमानुषा: ।
क्षीणाश्रवं तथाऽर्हन्तं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३८ ॥
यस्य पुरश्च पश्चाच्च मध्ये च नास्ति किञ्चन ।
अकिञ्चनमनादानं ब्राह्मणं तं ब्रवीम्यहम् ॥ ३९ ॥
ऋषभं प्रवरं वीरं महर्षिं विजितारिकम् ।
अनेजं स्नातकं बुद्धं ब्राह्मणं तं ब्रवीम्यहम् ॥ ४० ॥
वेद पूर्व्वनिवासं य: स्वर्गापायं च पश्यति ।
अथाभिज्ञाव्यवसित: प्राप्तो जातिक्षयं मुनि: ।
सर्वव्यवसावसानं ब्राह्मणं तं ब्रवीम्यहम् ॥ ४१ ॥

इति श्रीमद्भगवत्-शाक्यमुनि-भाषितं श्रीहरिहरानन्दस्वामिना पुनर्ग्रथितं धर्म्मपदं समाप्तिङ्गतम् । ओँ ।

---

* मानुषका: दिव्यश्च योग: = आयु: पञ्च कामगुणाश्च ।

† शीतिभूतं = प्रशान्तम् ।

‡ उपपत्तिं = जन्म ।

Sailabimbarama
Dodanduwa, Ceylon
24th April 1905.

Dear Sir,

I am sorry as I did not hear from you for a long time. I think that the work of translation of Visuddhimarga into English which you commenced ~~may~~ must have been done to some extent by this time. I hope I will be able to see any portion of it, if printed already. I know that an English translation of the Visuddhimarga is eagerly waited for by the English speaking ~~public~~ pundits. I did not yet receive the second part+ of "Karpura Manjari" which you promised. I heard that an English-Sanskrit

+ complete work [illegible]

[illegible]

dictionary has been published in America. I wish to have a copy of it.

Herewith I send you a presentation copy of Dhammapada Part I Asvaghosha: Text with glossary published by a pupil of mine Dipankara. Errors are shown in the notes. I am in sound health and hope to hear the same from you

I remain

Yours Sincerely

C. A. Seelakkhan

